# (४) अथ परिभाषाः ।

१ व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् । २ यथोद्देशं संज्ञापरिभाषम् । ३ कार्यकालं संज्ञापरिभाषम् । ४ अनेकान्ता अनुबन्धाः । ५ एकान्ताः । ६ नानुबन्धकृतमनेकाल्त्वम् । ७ नानुबन्धकृतमनेजन्तत्वम् । ८ नानुबन्धकृतमसारूप्यम् । ९ कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः । १० उभयगतिरिह भवति । ११ कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते । १२ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते । १३ निर्दिश्यमानस्यादेशा भवन्ति । १४ यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः । १५ अर्थवद्ग्रहणे नानर्थकस्य । १६ गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः । १७ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । १८ एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः । १९ एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते । २० भाव्यमानेन सवर्णानां ग्रहणं न । २१ भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति । २२ वर्णाश्रये नास्ति प्रत्ययलक्षणम् । २३ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि । २४ प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम् । २५ प्रत्ययग्रहणे चापञ्चम्याः । २६ उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् । २७ स्त्रीप्रत्यये चानुपसर्जनेन । २८ संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति । २९ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् । ३० पदाङ्गाधिकारे तस्य च तदन्तस्य च । ३१ व्यपदेशिवदेकस्मिन् । ३२ ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति । ३३ व्यपदेशिवद्भावोऽप्रातिपदिकेन । ३४ यस्मिन् विधिस्तदादावल्ग्रहणे । ३५ सर्वे विधयश्छन्दसि विकल्प्यन्ते । ३६ सर्वो द्वन्द्वो विभाषयैकवद् भवति । ३७ प्रकृतिवदनुकरणं भवति । ३८ एकदेशविकृतमनन्यवत् । ३९ पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः । ४० सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव । ४१ पुनः प्रसङ्गविज्ञानात् सिद्धम् । ४२ विकरणेभ्यो नियमो बलीयान् । ४३ कृताकृतप्रसङ्गि नित्यम् । ४४ शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति । ४५ असिद्धं बहिरङ्गमन्तरङ्गे । ४६ नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः । ४७ अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते । ४८ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते । ४९ वार्णादाङ्गं बलीयः । ५० अकृतव्यूहाः पाणिनीयाः । ५१ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति । ५२ क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते । ५३ पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् । ५४ मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् । ५५ अनन्तरस्य विधिर्वा प्रतिषेधो वा । ५६ पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । ५७ ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति । ५८ क्ताल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति । ५९ लादेशेषु वाऽसरूपविधिर्नास्ति । ६० उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् । ६१ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् । ६२ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः । ६३ साम्प्रतिकाभावे भूतपूर्वगतिः । ६४ बहुव्रीहौ तद्गुणसंविज्ञानमपि । ६५ चानुकृष्टं नोत्तरत्र । ६६ स्वरविधौ व्यञ्जनमविद्यमानवत् । ६७ निरनुबन्धकग्रहणे न सानुबन्धकस्य । ६८ क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते । ६९ समासान्तविधिरनित्यः । ७० सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य । ७१ सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपायः । ७२ तन्मध्यपतितस्तद्ग्रहणेन गृह्यते । ७३ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य । ७४ अङ्गवृत्ते पुनर्वृत्तावविधिः । ७५ संज्ञापूर्वको विधिरनित्यः । ७६ आगमशास्त्रमनित्यम् । ७७ गणकार्यमनित्यम् । ७८ अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । ७९ सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् । ८० प्रकृतिवद्

## शुद्धिपत्रम् ।

The official duties compelled the editor to be at Rajshahi while the book was printed at Calcutta. So, to his great regret, some misprints as noticed below have disfigured the book. The readers are to kindly correct them and the errors of other kinds where observed —

### (1) IN THE TEXT

| पृष्ठायाम् | पङ्क्तौ | अशुद्ध | शुद्धम् |
|---|---|---|---|
| १५ | २५ | दैवदत्ता वा | दैवदत्ता वा |
| ४३ | ९ | धातुष | ध तुष्क |
| ९९ | २ | रक्षिक | रथिक |
| १४८ | २४ | औंकाम | कामम् |
| १८८ | १५ | सुगीथव | सुगीतिश्रेव |
| २१४ | ४ | माऐन्द्रम् । | माहेन्द्रम् । महेन्द्रियम् । |
| २०५ | २१ | ठप्रपि । श्वयिका । | हप्रपि । नागयिको । |
| ११८ | ९ | भाति | भाति |
| ११२ | ८ | भ्वात्म्य | भामादयः |
| २६८ | १२ | भान्याद्येपण | भान्यायन्मेपण |
| | १६ | ईश्नते | ईश्मी |
| | | [illegible] | बहीवती |

